श्रीः ।

# अथ यवनजातकम् ।

देवज्ञेनसुबुद्धिनाविरचितम्.



खेमराज श्रीकृष्णदास इत्यनेन

मुम्बय्यां

स्वकीये "श्रीवेङ्कटेश्वर" यन्त्रालये-
ऽङ्कयित्वा प्रकाशितम् ।

शके १८२१, संवत् १९५६.



श्रीः ।

# अथ यवनजातकम् ।



अथपत्रिकादौआशीर्वादश्लोकाः ॥ सजयति ० ॥ १ ॥ यस्योदयास्तसमये ० ॥ २ ॥ श्रीमत्पंकजिनीपतिःकुमुदिनीप्राणेश्वरोभूमिभूःशशांकिःसुरराजवंदितपदोदैत्येंद्रमंत्रीशनिः ॥ स्वर्भानुःशिखीनांगणोगणपतिर्ब्रह्मेशलक्ष्मीधरास्तंरक्षंतुसदैवयस्यविमलापत्रीमयालिख्यते ॥ ३ ॥ आयुःश्रीसुखकांतिकीर्तिजननीमांगल्यपुष्टिप्रदापुण्याहेविदितेसखेचरगणालेख्यापटेपत्रिका ॥ दैवज्ञेनसुबुद्धिनाविचिताजन्मादिसंसारिताज्ञातेजन्मनिपूर्वजंकलिमल पत्रीमयालिख्यते ॥ ४ ॥ गणनाथोरविमुख्यखेचराः कुलदेवीविधिविष्णुशंकराः ॥ उदयांशाधिपतिः कुर्वतांचिरमायुःखलुयस्यपत्रिका ॥ ५ ॥ यस्यनास्तिखलुजन्मपत्रिकायाशुभाशुभफलप्रकाशिनी अंधकंभवतितस्यजीवितंदीपहीनामिवमंदिरंनिशि

॥ ६ ॥ यदुपार्जितमन्यजन्मनिशुभाशुभंतस्य कर्मणःप्राप्तिम् ॥ व्यंजयतिशास्त्रमेतत्तमसिद्रव्याणिदीपइव ॥ ७ ॥ विधात्रालिखितायासाललाटेऽक्षरमालिका ॥ दैवज्ञस्तांपठेत्प्राज्ञोहोरानिर्मलचक्षुषा ॥ ८ ॥ नमयाविहितंयंत्रंनमयास्थापिताघटी ॥ परोपादिष्टवेलायांलिख्यतेजन्मपत्रिका ॥ ९ ॥ आदित्याद्याग्रहाः सर्वेसनक्षत्राःसराशयः ॥ सर्वान्कामान्प्रयच्छंतुयस्यैषाजन्मपत्रिका ॥ १० ॥ असौदेवद्विजकुलदेवीप्रसादाद्दीर्घायुर्भूयात् ॥ स्वस्तिश्रीनृपशालिवाहनशके ॥ अमुकसंवत्सरे ॥ अमुकायने ॥ अमुकऋतौ ॥ अमुकमासि ॥ अमुकपक्षे अमुकतिथौ ॥ अमुकवासरे ॥ अमुकजन्मनक्षत्रे ॥ अमुकचरणे ॥ अमुकयोनौ ॥ अमुकगणे ॥ अमुकमहानक्षत्रे ॥ सूर्यर्क्षात्पुरुषाकारचक्रे ॥ अमुकस्थलेपतितम् ॥ ॥ फलम् ॥ ॥ अमुकप्राप्तिः ॥ अमुकराशिस्थितेचंद्रे ॥ अमुकराशिस्थितेसू

यें ॥ अमुकयोगे ॥ अमुककरणे ॥ एवंपंचांगशुद्धौ तद्दिनेदिवारात्रौवा ॥ अमुकलग्नेवहमाने ॥ लग्नाधिपेअमुके ॥ राश्यधिपेअमुके ॥ अमुकांशे ॥ अमुकद्रेष्काणे ॥ एवंशुभग्रहावलोकितकल्याणोदयवेलायांश्रीमद्रमोमारमणचरणसेवापरांतःकरणानां राजमान्यानामसुकानांभार्यौभयकुलानंददायिनीरमणयमुकनाम्नीपुत्ररत्नंकन्यारत्नंवाप्रासूत ॥ अस्याभिधानमवकहडाचक्राऽनुसारेणामुकंप्रतिष्ठितम् ॥असौदेवद्विजकुलदेवीप्रसादाद्दीर्घायुर्भूयात्॥ अथास्यप्राकृतजन्मकालोलिख्यते ॥ अस्यजन्ममासोऽमुकः ॥ जन्मतिथिरमुका ॥ जन्मनक्षत्रममुकम् ॥ जन्मराशिरमुकः॥अथास्ययात्रादौवर्ज्यम्॥ घातवारातिथिनक्षत्रचंद्राश्चलेख्याः ॥ अथजातस्य जंतोःषट्धिष्ण्यानि ॥ जन्मभं दशमं १० कर्मभं सांघातंषोडशभम् १६ ॥ अष्टादशम् १८ ॥ सामुदायंत्रयोविंशम् २३ ॥ विनाशभम् ॥ मानस

क्षंपंचविंशम् २९ षट्नक्षत्रंप्रकीर्तितम् ॥ एतेषुन क्षत्रेषुषट्सुपापग्रहाधिष्ठितेषुसत्सुपीडाभवेत् ॥ त च्छांत्यैदानंजपहोमौवाकारयेत् ॥ अथजन्मसमये तात्कालिकाग्रहाः सलग्नालिख्यंते ॥ ग्रहान्संले ख्य ग्रहचक्रंकार्यं तद्यथालग्नाद्द्वादशराशिषुग्रहाः रव्यादयःस्थाप्याः ॥ अथजातस्यबालस्यपं चांगफलानिलिख्यंते ॥ तत्रादौसंवत्सरफलम् ॥ प्रभवादिकजातानांनराणांयवनैःस्फुटम् ॥ फलं क्रमेणतत्सर्वंकथ्यतेचाथशोभनम् ॥ संग्रही सर्ववस्तूनांपुत्रसंपत्तिरेवच ॥ दीर्घायुर्भोगसंपन्नः प्रभवेजायतेनरः ॥ १ ॥ उत्पन्नभोगभोगीस्यात्क लावांश्चारुदर्शनः ॥ पंडितोराजपुत्रश्चविभवेऽदेन रोभवेत् ॥ २ ॥ सुभगःकांतिमान्भोगीपुत्रदारसम न्वितः ॥ विद्वान्सर्वगुणोपेतःशुक्लसंवत्सरेनरः ॥ ॥ ३ ॥ सदानंदपरःसत्यवादीपरहितेरतः ॥ गुणी ख्यातःसुखीमानीप्रमोदेजायतेनरः ॥ ४ ॥ प्रजा

नांपालकोधर्मीकृपासत्यसमन्वितः ॥ देवब्राह्मण भक्तश्चप्रजापतिसमुद्भवः ॥ ५ ॥ कांतःश्रीमान् सुखीमानीगीतप्रियश्चवल्लभः ॥ दीर्घायुर्बहुपुत्रः स्यादंगिरावत्सरेभवेत् ॥ ६ ॥ श्रीमान्शुभमतिः शास्त्रपारगःसुहृदःप्रियः ॥ बलवान्कीर्तिमांश्चैवजा यतेश्रीमुखेनरः ॥ ७ ॥ भावसंवत्सरेजातोनरोभव तिसौख्यभाक् ॥ यशस्वीदाननिरतःसर्वलक्षणसं युतः ॥ ८ ॥ कांतःसर्वगुणोपेतोदीर्घायुर्दानत त्परः ॥ ख्यातःशुभमतिश्चैवयुवाब्देपुरुषोभवेत् ॥ ॥ ९ ॥ व्यापारकुशलोभूपमानीशत्रुनिबर्हणः ॥ अरोगीधनलुब्धश्चधातावर्षेनरोभवेत् ॥ १० ॥ समर्थःसर्वलोकेषुगुरुभक्तोतिसुंदरः ॥ ईश्वरेजाय तेमर्त्यःसदाक्रोधपरायणः ॥ ११ ॥ वणिक्कृषीवलो ग्रामकर्ताधान्यधनैर्युतः ॥ जायापुत्रसुहृद्भिश्चब हुधान्येप्रजायते ॥ १२ ॥ सेनानीर्नृपतेर्मंत्रीरथ ध्वजैःसुकीर्तितः ॥ शास्त्रसंग्राहकश्चैवप्रमाथिवत्स

रेभवेत् ॥१३॥ उग्रःप्रतापशीलश्चपररागविमर्दनः॥ पापकर्मरतःशूरोविक्रमेऽब्देनरोभवेत् ॥ १४ ॥ मंदोलसोहास्यमुखोभारवाहःकृषीवलः ॥ परकर्मरतोनित्यंवृषाब्देबालकोभवेत् ॥१५॥ चित्रभानुसमुद्भूतोनरोविद्यामतिर्भवेत् ॥ नीतिमान्बुद्धिमाञ्छ्रीमान्स्वामिभक्तःप्रियंवदः ॥१६॥ पिंगदृक्पिंगकेशश्चगोस्वल्पश्चविभूत्तमः ॥ सुभानुवत्सरेजातःकांतिमानतिदुर्जनः ॥ १७॥ चंचलोचपलोदृष्टस्तारणेऽब्देनरोभवेत् ॥ धूर्तःपापरतःक्रूरोदरिद्रीनिष्ठुरःसदा ॥ ॥ १८ ॥ मृदुभाषीराजमानीराजसःशुभलक्षणः ॥ प्रभुर्धनसमृद्धश्चपार्थिववत्सरेनरः॥ १९ ॥ द्यूतमद्यपरस्त्रीणांव्यसनैर्धनवर्जितः ॥ व्ययसंवत्सरेसर्वचौरपापमतिर्भवेत् ॥ २० ॥ स्वकर्मनिरतःशास्त्रपारगोऽतिविचक्षणः ॥ ह्रस्वःस्थूलतनुःश्यामःसर्वजित्प्रभवोनरः ॥ २१ ॥ बहुभृत्यधनीकामीभोगीमिष्टान्नभुग्लघुः ॥ सर्वधारीजातनरःसर्वाधारपरो

भवेत् ॥ २२॥ कुटुंबकलिकर्ताचपरदेशरतःसदा॥ सर्वलोकविरोधीचविरोधिवर्षसंभवः ॥ २३ ॥ कृष्ण वर्णतनुःक्षामःकरालास्योतिनिर्घृणः ॥ विकृष्टपर्वो रूक्षश्चविकृतेऽब्देभवेन्नरः ॥ २४ ॥ धूलीधूसरसर्वा गोदीर्घघर्घरशब्दवान् ॥ कामातुरश्चसंजातःखर संवत्सरेनरः ॥ २५ ॥ सदानंदःसदातुष्टोवापीकू पतडागकृत् ॥ अन्नदातासुशीलश्चनरोनंदनवर्षजः ॥ २६ ॥ शूरःसंग्रामशीलश्चख्यातःकीर्तियशो न्वितः॥ पृथ्वीपतिर्जयीभूपोविजयेऽब्देनरोभवेत् ॥ ॥ २७॥ विद्वान्वादीलोकमानीसर्वशास्त्रविशारदः॥ पूजामाप्नोतिसर्वत्रजयवर्षेप्रजायते ॥ २८ ॥ उत्प न्नभोगभोक्ताचकामिनीवल्लभःसुखी ॥ सर्वाभरण भूषाढ्योमन्मथेचनरोभवेत् ॥ २९ ॥ शठःक्रूरमति र्दुष्टोहिंसकोवृषलीपतिः ॥ वक्रोदुष्टवचःश्रावीदुर्मु खेऽब्देभवेन्नरः ॥ ३० ॥ धनधान्यादिभोगीचप शुवस्त्रसमृद्धिमान् ॥ कालवान्सगुणाढ्यश्चहेमलं

विसमुद्भवः ॥ ३१ ॥ नंदीलुब्धोलसोदुःखीश्लेष्मणश्चातिरोगवान् ॥ निरतःपापकर्मेषुविलंबिवत्सरे शिशुः ॥ ३२ ॥ अविवेकीमहागर्वीनिपातकुशलः खलः ॥ विकारिवत्सरेजातःप्राणीभवतिचंचलः ॥ ॥ ३३ ॥ चंचलोमदनेसक्तः परसेवारतःसदा ॥ निद्राघूर्णितनेत्रश्चशार्वरीवर्षसंभवः ॥ ३४ ॥ चंचलश्चपलःकामीपरसेवारतःसदा ॥ हंताबहुजनानां चजातोवर्षेप्लवाख्यके ॥ ३५ ॥ सुभगःशुभकर्माच विद्याधर्मपरायणः ॥ दीर्घायुर्धनपुत्राढ्यःशुभकृद्वर्षजःपुमान् ॥ ३६ ॥ सर्वत्रविजयीचारुदृष्टिःप्रियगुणान्वितः ॥ दयालुःशोभनेवर्षेजातोभवतिमानवः ॥ ३७ ॥ पिंगाक्षःपिंगकेशश्चमंदगामीस्त्रीलोलुपः परकर्मनिहंताचक्रोधीसंवत्सरेनरः ॥ ३८ ॥ विश्वावसुसमुद्भूतःप्रजावान्ससमृद्धिमान्॥ शांतःसर्वगुणोपेतोदातामिष्टान्नभुक्शुचिः ॥ ३९ ॥ परदाररतश्चौरःपारुष्यवचनःकृशः ॥ पराभवसमुद्भूतोधनधा

न्यविवर्जितः ॥४०॥ प्लवंगवत्सरेजातःकिलकष्टीच चदुर्बलः ॥ पांडुरोदुष्टरोगश्वस्वाचारोहितकृत्सुधीः ॥ ४१ ॥ मध्यमरूपःप्रियवाक्क्षुधितोमार्षितोमहान् ॥ कीलकेजायतेबालःस्थूलहत्कटिमस्तकः ॥ ४२ ॥ पंडितोधनभोगीचदेवताऽतिथिपूजकः ॥ तामसःकृशदेहश्वनरःसौम्येप्रजायते ॥ ॥ ४३ ॥ नीचवृत्तिःशुचिःकामरहितःपरदेशगः ॥ वेदनिंदापरःक्रोधीसाधारणसमुद्भवः ॥ ४४ ॥ विरोधीसर्वलोकानांपितृभक्तिविवर्जितः ॥ विरोधकृद्वत्सरेचजातिसंकरकृद्भवेत् ॥ ४५ ॥ विद्वान् सर्वकलाभिज्ञोव्यापारकुशलःसुधीः ॥ राजमानी दानशीलःपरिधाविसमुद्भवः ॥ ४६ ॥ प्रमाथिवत्सरेजातोनरोबंधुविरोधकृत् ॥ कुटुंबघातकोलुब्धः पापाकर्मरतःसुधीः ॥ ४७ ॥ बहुभार्योतिचतुरआनंदेवत्सरेभवेत् ॥ पुत्रवान्धनवाञ्जातःपुत्रवृद्धिसमन्वितः ॥ ४८ ॥ सर्वभक्षीकृतांतश्चवर्णावर्णवि

वर्जितः ॥ हिंस्रःपरमसंतापीराक्षसेऽब्देनरोभवेत् ॥
॥४९॥ वैश्यवृत्तिःस्वल्पधनःकुटुंबवत्सलःशुचिः ॥
जनसौख्यकरोबालोजातोनलाख्यवत्सरे ॥ ५० ॥
कपिलश्चकिछरोरोगीमहोद्यमपरोभवेत् ॥ लोकांत
कारकःकालःपिंगलेऽब्देनरोभवेत् ॥ ५१ ॥ कालयु
क्तसमुद्भूतोनरोभवतिरोगभाक् ॥ ऋद्धिसिद्धियु
तोनित्यंगीतवाद्यविशारदः ॥ ५२ ॥ मैत्रीकीर्तिप
रोदाताधनधान्ययुतोभवेत् ॥ दीर्घायुर्बहुपुत्रश्चसि
द्धार्थीवर्षजःपुमान् ॥ ५३ ॥ भयंकरवपुःपापीपिशु
नोघातकृद्भवेत् ॥ रौद्रसंवत्सरेजातोनरःस्वल्पायु
षोधनः ॥ ५४ ॥ मूर्खःक्रूरमतिःकामीस्वकीयवच
नाप्रियः ॥ अदाताधनलुब्धश्चदुर्मतिवत्सरोद्भवः ॥
॥५५॥ नित्योत्साहीक्षितिपतिर्गजाश्वरथसैनिकः ॥
वादित्रध्वनिसौख्याढ्योदुंदुभिवर्षजोभवेत् ॥ ५६ ॥
शरीरेचमहारोगीशस्त्रपीडानिपीडितः ॥ दुष्कर्मकृ
न्नरोजातोरुधिरोद्गारिवत्सरे ॥ ५७ ॥ नेत्ररोगीमं

दृष्टिर्दक्षोधर्मरतःसदाः ॥ दुर्जनःकामबहुलोरक्ता क्षीवर्षजःशिशुः ॥ ५८ ॥ तामसोनिर्घृणःक्रोधी धातुवादीभयंकरः ॥ क्रोधनाब्देजातनरोवंचकःपाप बुद्धिमान् ॥ ५९ ॥ उत्पन्नार्थःक्षयकरःपरसेवारतः खलः ॥ क्षयसंवत्सरेजातोनरोधर्मविवर्जितः ॥ ॥ ६०॥ इतिश्रीयवनजातकेसंवत्सरफलम् ॥ ॥ अथायनफलम् ॥ ॥ प्रियायुतःसौख्यगुणा न्वितश्चदीर्घायुराचारमतिःप्रवीणः ॥ देवद्विजा चार्यपदानुरक्तःसौम्यायनेजातनरोभवेच्च ॥ १ ॥ इतिउदगयनफलम् ॥ ॥ अथदक्षिणायनफ लम् ॥ ॥ क्रूरःशठोरोगसुतप्तदेहःपापात्म कश्चौर्यरतःकृशश्च ॥ पौंश्चल्यकृत्क्रूरमतिःशिशुः स्याद्दाक्षिण्यजश्चैवनरोयदास्यात् ॥ १ ॥ इतिद क्षिणायनफलम् ॥ ॥ अथऋतुफलम् ॥ ॥ शिशिरेजायतेमर्त्यौबलसौख्यचिरायुषः ॥ मिष्टान्न भुक्चैवनरोदंतरोगीप्रजायते ॥ १ ॥ सुखीभोगी

गुणीकांतःसदावसनवान्भवेत् ॥ वसंततौजातनरो दानकीर्तिपरोभवेत् ॥ २ ॥ वापीकूपतडारामदेवालयपरोभवेत् ॥ वेदविद्वान्नदाताचग्रीष्मर्त्तौजायतेनरः ॥ ३ ॥ देशग्रामप्रजाध्यक्षकृषिकर्त्तामहाद्युतिः ॥ सस्यसंग्रहणेदक्षोवर्षर्तौजायतेनरः ॥ ४ ॥ व्यापारकुशलोमंत्रीधर्मिष्ठःसत्यवाक्शुचिः ॥ पंडितोगुणवान्धीरःशरदृतुसमुद्भवः ॥ ५ ॥ श्लक्ष्णांगः पुत्रवान्वाग्मीधर्मिष्ठःसत्यवाक्शुचिः ॥ भुंजतेमिष्टमन्नंचहेमंतेचभवेन्नरः ॥६॥ इतिऋतुफलम् ॥ ॥

१ मेष मेषलग्नोदयेजातोगुरुभक्तःप्रियंवदः ॥ गुणीकांतः प्रियालुब्धःशूरःसर्वजनप्रियः ॥ १ ॥ वृषोदयेनरो
२ वृष जातोधनीकांतःप्रियंवदः ॥ लुब्धःकामीगुरोर्भक्तो मैत्रोमानीमहाबलः ॥ २ ॥ मिथुनोदयसंजातोज्ञा
३ मिथुन नीयजनवत्सलः ॥ नानामतिसमायुक्तोदीर्घसूत्रीविमर्षकः ॥ ३ ॥ कर्कलग्नोदयेजातोधर्मिष्ठोगुरुवत्स
४ कर्क लः ॥ मिष्टान्नभुक्सुसंभोगीसौभाग्यस्वजनप्रियः ॥

॥ ४ ॥ सिंहलग्नोदयेजातोभोगीशत्रुविमर्षकः ॥
स्वल्पोदयेल्पपुत्रश्चसोत्साहीरणविक्रमः ॥ ५ ॥
कन्यालग्नोदयेजातोनानाशास्त्रविशारदः॥ सौभाग्य
धनसंपन्नःसत्यवादीनृपप्रियः ॥ ६ ॥ तुलालग्नोदये
जातःशुद्धधीर्धर्मनायकः ॥ प्रजावान्युक्तधर्मस्तुध
नाढ्योधनवर्जितः ॥ ७ ॥ अलिलग्नोदयेजातः
शौर्यवान्मृदुमानसः ॥ विज्ञानज्ञानवेत्ताचविद्वे
षीविग्रहीसुधीः ॥ ८ ॥ धनलग्नोदयेजातोनीतिमा
न्धनवान्सुधीः ॥ कुलमध्येप्रधानोहिप्राज्ञोभृत्येषु
पोषकः॥९॥मृगलग्नोदयेजातोनीचकर्माबहुप्रजाः॥
लुब्धोऽलसःशठोदीनःस्वकार्यनिरतोधमः ॥ १० ॥
कुंभलग्नोदयेजातोवित्तवानतिसौहृदः॥ परदाररतो
नित्यंमृदुकायोमहान्सुधीः ॥११॥ मीनलग्नोदयेजा
तःप्रभुवाक्येषुबुद्धिमान् ॥ अल्पकामोतिगौरश्चप्र
जावांश्चैवधार्मिकः॥१२॥इतियवनजातकेमेषादिल
ग्नफलम् ॥ ॥ अथग्रहभावफलानि ॥ ॥ लग्नस्थ

तोदिनकरःकुरुतेंगपीडां पृथ्वीसुतोवितनुतेरुधिर प्रकोपम् ॥ छायासुतःप्रकुरुतेबहुदुःखभाजंजीवें दुभार्गवबुधाःसुखकांतिदाःस्युः ॥ १ ॥ दुःखा वहाधनविनाशकराःप्रदिष्टावित्तस्थितारविशनैश्चर भूमिपुत्राः ॥ चंद्रोबुधःसुरगुरुर्भृगुनंदनोवासवेंध नस्यनिचयंकुरुतेधनस्थाः ॥ २ ॥ भानुःकरोति निरुजंरजनीकरोवाकार्यान्वितंक्षितिसुतःप्रचुरप्रभा वम् ॥ सिद्धिंबुधः सुधिषणःसुविनीतदोषःस्त्रीणांप्रि यंरविसुतोभृगुजस्तृतीयः ॥ ३ ॥ आदित्यभौ मशनयः सुखवर्जितांगंकुर्वंतिजन्मनिरतंसुचिरंच तुर्थः ॥ चंद्रोबुधःसुरगुरुर्भृगुनंदनोवासौख्यंधियं नृपतिनासततंप्रवृत्तिम् ॥ ४ ॥ पुत्रेरविःप्रचुरकोप मतिंबुधोपिनिःसंततिंशनिधरातनुजावपुत्रम् ॥ शुक्रेंदुदेवगुरवः सुतधामसंस्थाः कुर्वंतिपुत्रनिवहंसु खिनंसुरूपम् ॥ ५ ॥ मार्तंडभूमितनुजौहतशत्रु पक्षंपंगुंवरंरिपुगृहेनृपपूजनीयम् ॥ शक्रेन्दुजौमति

विहीनमतःसुरोगंजीवःकरोतिविकलंपुरुषंशशांकः ॥ ६ ॥ तिग्मांशुभौमशनयःकिलसप्तमस्थाःकुर्वंतिदुःखनिवहंतनुसंततिंच ॥ जीवेंदुशुक्रविबुधा बहुपुत्रयुक्तंधर्मान्वितंजनमनोहररूपवंतम् ॥ ७ ॥ सर्वैग्रहादिनकराभिमुखानितांतंमृत्युस्थिताविदधतेकिलदुष्टबुद्धिम् ॥ शस्त्रोपघातपरिपीडितदृष्टमात्रंविद्याविहीनमतिरोगगणैरुपेतम् ॥ ८ ॥ धर्मस्थितारविशनैश्चरभूमिपुत्राः कुर्वंतिधर्मविलयंजनयंतिशून्यम् ॥ चंद्रोबुधोभृगुसुतश्चसुरेंद्रमंत्री धर्मक्रियासमधिकंकुरुतेमनुष्यम् ॥ ९ ॥ आदित्यभौमशनयःकिलकर्मसंस्थाःकुब्जंनरंबहुलकर्मकरंदरिद्रम् ॥ चंद्रःसुकीर्तिमुशनाबहुवित्तयुक्तंरूपान्वितंबुधगुरूशुभकर्मकंच ॥ १० ॥ लाभस्थितोदिनपतिर्नृपरूपरूपंतारापतिर्बहुधनंक्षितिजःक्षितीशम् ॥ सौम्योविवेकवसतिंसुभगंच जीवःशुक्रःकरोतिसधनंरविजःसुकीर्तिम् ॥ ११ ॥

सूर्यःकरोतिपुरुषंव्ययगोविशीलंकाणंशशीक्षितिसु
तोबहुपापभाजम् ॥ ॥ चंद्रात्मजोगतधनंचगुरुः
कृशांगंशुक्रोबहुव्ययकरंरविजःसुतीव्रम् ॥ १२ ॥
इतिग्रहभावफलानि ॥ ॥ अथमासफलानि ॥ ॥
ब्रह्मचर्यरतोनित्यंवेदाध्ययनतत्परः ॥ गुरुदेवद्वि
जातीनांभक्तश्चैत्रसमुद्भवः ॥ १ ॥ सर्वलक्षणसंयु
क्तोदीर्घदर्शीकलानिधिः ॥ सात्त्विकश्चिरजीवीच
वैशाखेजायतेनरः ॥ २ ॥ निपुणःसर्वकार्येषुनि
र्मांसश्चपरीक्षकः ॥ क्रयविक्रयकृन्नित्यंभवेज्ज्येष्ठेच
मानवः ॥ ३ ॥ निर्धनोबहुभुक्कष्टीहलकर्मरतः
सदा ॥ व्याधितोमूर्खबुद्धिश्चभवेदाषाढजोनरः ॥
॥ ४ ॥ श्रावणेजायतेमर्त्योवेदकर्मविशारदः ॥
पुत्रदारधनैर्युक्तोसर्वलोकेप्रपूजितः ॥ ५ ॥ भोगी
दाताकृशोदीर्घोगौरःकामीबहुस्त्रिकः ॥ पुत्रवान्ध
नवाञ्छ्रीमान्नरोभाद्रपदेभवेत् ॥ ६ ॥ आश्विने
चनरोजातोविद्वान्भूपप्रियोभवेत् ॥ बहुभृत्यःस्त्रि

यायुक्तोबह्वपत्योल्पजीवितः ॥ ७ ॥ वाचालोवक्र
बुद्धिश्चकुंचिताग्रकचोलसः ॥ कार्तिकेजायतेनित्यं
ब्रह्मचर्यरतोभवेत् ॥ ८ ॥ तीर्थयात्रारतोनित्यंमंत्र
दीक्षापरायणः ॥ मार्गमासेभवेन्मर्त्यःसदाशास्त्रवि
शारदः ॥ ९ ॥ पौषमासेसमुत्पन्नोनरोदुःखपरोभ
वेत् ॥ सर्वस्वरहितोगुप्तःपापमार्गरतःखलः ॥
॥ १० ॥ योगीश्वरस्तपोनिष्ठोवेदवेदांगपारगः ॥
शांतोदयान्वितोदक्षोनरोमाघेप्रजायते ॥ ११ ॥
सुकुमारःसदाभोगीकामिनीवल्लभःसुखी ॥ फाल्गु
नेजायतेमर्त्योगजाश्वनरभूषितः ॥ १२ ॥ ॥
इतियवनजातकेमासफलम् ॥ ॥ अथ दिन
रात्रिफलम् ॥ ॥ तेजस्वीपितृसाहृय्यश्चा
रुदृष्टिर्नृपप्रियः ॥ बंधुप्रियोधनाढ्यश्चदिवाजातो
नरोभवेत् ॥ १ ॥ मंददृग्बहुकामार्तःक्षयरोगी
मलीमसः ॥ क्रूरात्माछिन्नपापश्चनिशिजातोनरो
भवेत् ॥ २ ॥ इतिदिवारात्रिफलम् ॥ ॥ अथपक्ष

फलम् ॥ ॥ शुक्लपक्षेनरोजातोदीर्घायुः पुत्रवान्भवेत् ॥ बहूनांपालकोदातासुहृन्मानी स्त्रियाजितः ॥ १ ॥ अलसोमलिनोद्वेषीनिंदको ग्रामभाषकः ॥ कृष्णपक्षेभवेन्मर्त्यःसर्वधर्मबहिष्कृतः ॥ २ ॥ इतिपक्षफलम् ॥ अथतिथिफलम् ॥ प्रतिपद्दिवसेजातोभाग्यवान्गुणवान्भवेत् ॥ स्त्रीसौख्यंवेश्मसौख्यंचवर्षाशीतिमहायुषः ॥ १ ॥ द्वितीयादिवसेजातोनरःसत्यपरोभवेत् ॥ जनानंदपरःशूरःशस्त्रकर्मरतोभवेत् ॥ २ ॥ तृतीयायांनरोजातःस्त्रीलोभीकृपणश्चलः ॥ व्रतोपवासनिरतःसत्यवादीबलान्वितः ॥ ३ ॥ चतुर्थ्यांतु नरोजातोलुब्धःपिशुनवान्भवेत् ॥ चंडःसाहसिकःशूरोबलवित्तःशठान्वितः ॥ ४ ॥ पंचम्यांतु नरोजातोदीर्घायुःपुत्रवान्भवेत् ॥ महामतिःस्थिरः शूरःसत्यवादीजितेंद्रियः ॥ ५ ॥ षष्ठ्यांचैवनरो जातोव्रणांकिततनुःस्थिरः ॥ स्त्रीलोलुपोतिसुहृ

दोविद्याकीर्तियुतोभवेत् ॥ ६ ॥ सप्तम्यांतुनरो जातोधनवान्गुणवान्भवेत् ॥ गुरुदेवार्चनपरःसदा चारोदृढव्रतः ॥ ७ ॥ अष्टमीदिवसेजातःस्वदार निरतोभवेत् ॥ बहुवादीचचपलश्चलचित्तोतिनि ष्ठुरः ॥८॥ कामयुक्तोमहाशूरोगीतनृत्यरतःसदा ॥ शत्रुघ्नश्चमहाक्रोधीनवम्यांजायतेनरः ॥ ९ ॥ दश म्यांजायतेमर्त्योलोकेव्यापारकोविदः ॥ कलाशा स्त्रेषुकुशलःसत्यवादीदृढव्रतः ॥ १० ॥ एकाद श्यांनरोजातोदुराचारोतिदुःसहः ॥ सुभगोरतिलो लश्चवस्त्रभोजनतत्परः ॥ ११ ॥ द्वादश्यांतुन रोजातोस्त्रीजितोधनवान्भवेत् ॥ व्रतोपवासनियतः सशत्रुर्मतिमान्भवेत् ॥ १२ ॥ त्रयोदश्यांनरोजा तःसुशुद्धःसर्वकर्मसु ॥ बुद्धिमान्व्याधिनिर्मुक्तःस दाबंधुयुतोभवेत् ॥ १३ ॥ चतुर्दश्यांनरोजातः पूर्णांगःसुस्थिरोभवेत् ॥ सदाहृष्टोमनःकामीसुभ गोतिरणान्वितः ॥ १४ ॥ अमायांतुनरोजातः

शत्रोरातिगतःसुखी ॥ सुभगोबलहीनश्चवित्तेबहु
समाकुलः ॥ १८ ॥ इतितिथिफलम् ॥ ॥ अथ
वारफलम् ॥ ॥ अथातःसंप्रवक्ष्यामिवासराणां
चजातकम् ॥शृणुयत्नेनहेवत्सनराणांचविशेषतः ॥
॥ १ ॥ अल्पकुंचितमूर्धाचमुखेपित्राकृतिस्तथा॥
क्षात्रवृत्तिःसुरूपश्चमधुपिंगलकांतिमान् ॥ २ ॥
स्थिरःप्रचंडोरस्कश्चरक्तश्यामतनुःशुचिः ॥ पित्ता
धिकोतिचतुरोजनयेद्रविवासरे ॥ ३ ॥ इतिसूर्य
फलम् ॥ सौम्योतिकांतोमधुरःपिशंगोतिकृशस्त
नुः ॥ युवाचसूक्ष्मकेशश्चप्रवासाकुंचितोगुणी ॥
॥ १ ॥ सोमवारेनरोजातःसात्विकःक्षात्रवृत्तिमान्
ह्रस्वकायोतिगौरश्चपृथुवक्षाःसुबुद्धिमान् ॥ २ ॥
इतिसोम० ॥ क्षात्रवृत्तिसमायुक्तोजनयेद्भौमवासरे
रक्तास्योरक्तनेत्रश्चवाग्यतोमररक्षकः ॥ १ ॥
इतिभौ० ॥ श्यामवर्णोमहागौरःकांतिमान्स्फुट
वाक्सुधीः ॥निपुणोवर्तुलशिरःपादश्चैवतथाकटिः॥

रूपवान्मतिमान्कल्पोजनयेद्बुधवासरे ॥ १ ॥
इतिबु०॥ सुधीरोबहुलोकेशःकालशास्त्रविशारदः॥
प्रगल्भःकुशलोधीरःसभवेत्गुरुवासरे ॥ १ ॥ इति
गुरु० ॥ प्रच्छन्नकार्यःसुमतिर्जातःशुक्रस्यवासरे ॥
सुधीःसदेशकालज्ञःकलाशास्त्रविशारदः ॥ १ ॥
इतिशुक्र० ॥ दीनःकृशांगःपरमदीर्घालस्योद्धुरा
सदः ॥ वाताधिकोनीचकर्मामूर्खःस्थूलनखत्वचः
॥ १ ॥ रूक्षोदुर्बलदेहश्चमलिनोतिचलःखलः ॥
रौद्रःक्रोधीराक्षसश्चजनितःशनिवासरे ॥ २ ॥ इति
शनिवारफलम् ॥ अथनक्षत्रफलम् ॥ अर्थवांश्चा
पिशूरश्चसुभगोधनवल्लभः॥ दक्षःक्रूरोमहाकायश्चा
श्विन्यांजायतेनरः॥ १ ॥ भरण्यांचप्रवक्ताचह्य
रोगीसुस्थिरोभवेत् ॥ सप्राज्ञोमतिमांश्चैवसत्यवा
क्योदृढव्रतः ॥ २ ॥ तेजस्वीनीतिमांश्चैवबहुभु
ग्जनवल्लभः ॥ गंभीरःकुशलोमानीवह्निनक्षत्रजः
शुचिः ॥ ३ ॥ सुरूपःस्थिरधीर्मानीभोगभाक्सुरत

प्रियः ॥ प्रियवाक्चतुरोदक्षस्तेजस्वीधातृधिष्ण्यजः
॥ ४ ॥ उत्साहीचपलोभीरुर्धनीमानीप्रियःशुचिः॥
आगमज्ञःप्रभुर्दक्षश्चंद्रनक्षत्रजोनरः ॥ ५ ॥ अवि
चारपरःशूरोनिपुणःक्रयविक्रये॥ गर्वीहिंस्रःक्रूरतनुः
कृतघ्नः शिवधिष्ण्यजः ॥ ६ ॥ दुर्मेधावान्दर्श
नीयःपरस्त्रीकार्यनैपुणः ॥ सहिष्णुरल्पसंतुष्टःशी
घ्रगोदितिधिष्ण्यजः ॥ ७ ॥ अतिकामीसुपुष्टश्च
चंचलःस्थिरधीःशुचिः ॥ पुष्यनक्षत्रसंजातःसर्वशा
स्त्रविशारदः ॥८॥ सुरूपःसुभगःक्रूरःपरस्त्रीतत्परः
शठः ॥ अवक्ताव्यसनाक्रांतःसार्पनक्षत्रजोनरः ॥
॥ ९ ॥ क्रूरःस्थूलहनुःकोपीवक्ता थांसहःप्रभुः ॥
सुरगुर्वर्चनरतस्तेजस्वीपितृधिष्ण्यजः ॥ १० ॥
द्युतिमांश्चधनीदातानृत्यशास्त्रविशारदः ॥ कार्या
कार्यविचारज्ञोभाग्यनक्षत्रजोनरः ॥ ११ ॥ जित
शत्रुःसुखीभोगीनित्यशःप्रमदाप्रियः ॥ कलाभि
ज्ञःसत्यरतःसुविद्वानर्यमर्क्षजः ॥ १२ ॥ कृतविद्य

श्चसुभगोधनाढ्यःसाहसीभवेत् ॥ परोपकारीस
हस्त वेज्ञोहस्तेजातोनरोभवेत् ॥ १३ ॥ चित्रमा
ल्यांबरधरःकामशास्त्रविशारदः ॥ द्युतिमान्धन
चित्रा वान्भोगीपंडितस्त्वाष्ट्रधिष्ण्यजः ॥ १४ ॥ धार्मि
कःसत्यवाक्शूरःक्रयविक्रयनैपुणः ॥ कामीबहुक्र
स्वाति तुर्दानीविद्यावान्मारुतर्क्षजः ॥ १५ ॥ अभ्यसूया
परःसूक्ष्मःकृपालुरतिनिंदितः ॥ जितेंद्रियोऽर्थवाँ
विशाखा ल्लुब्धोविशाखाधिष्ण्यसंभवः ॥ १६ ॥ नृपकार्यर
तःशूरोविदेशस्थोऽगनाप्रियः ॥ सुरूपाइच्छिन्नपापश्च
अनुराधा भवेन्मैत्राख्यधिष्ण्यजः ॥ १७ ॥ बहुव्ययकरः
क्लेशसहःकामीदुरासदः ॥ क्रूरचेष्टोमृषाभीतोधन
ज्येष्ठा वानिंद्राधिष्ण्यजः ॥ १८ ॥ साधुर्मानीधनीभोगीपर
कार्योपकारकः ॥ मिथ्योपचारःस्त्रीलोलःश्लक्ष्णोनि
मूल ऋतिधिष्ण्यजः ॥ १९ ॥ सुमुखीसुविनीतश्चत्या
पूर्वाषाढा गीस्याद्धाप्तुवत्सलः ॥ क्लेशभागीयुवामानीजलनक्ष
त्रसंभवः ॥ २० ॥ कृतज्ञोधार्मिकःशूरोबहुपुत्रावि

नीतवान् ॥ सुकलत्रःसुरूपश्चवैश्वनक्षत्रसंभवः॥२१
उदारःश्रुतवान्धीरोविद्वान्वक्ताधनान्वितः ॥ कला
वान्सकलाभिज्ञोधार्मिकःश्रवणर्क्षजः ॥२२॥धर्मिष्ठो
व्यसनीक्रूरःक्षयरोगयुतःशठः ॥ परदाररतःशूरो
धनिष्ठासंभवोनरः ॥ २३ ॥ शतताराजनिर्यस्य
कुशीलोदारलंपटः ॥ मायावादीविशालश्चसौख्य
भुक्शठउच्यते ॥ २४ ॥ उद्विग्नःस्त्रीजितःशाठ्य
परनिंदासुनैपुणः ॥ अधर्मतत्परःशूरश्चाजपादेच
संभवः ॥ २५ ॥ प्रजावान्धार्मिकोवक्ताजितशत्रुः
सुखप्रदः ॥ दृढव्रतःसदाकामीचाहिर्बुध्न्यसमुद्भवः ॥
॥ २६ ॥ रूपवान्धनवान्भोगीपंडितश्चंचलार्थभा
क्॥कामीदुर्गजितःशूरःपौष्णजःपरदेशगः ॥ २७ ॥
इतिनारदीयसंहितायांनक्षत्रफलम् ॥ ॥ अथ
योनिफलम् ॥ ॥ अश्विनीशततारकाअश्वयो
निः ॥ ॥ फलम् ॥ ॥ चंचलश्चपलोहृष्टःशी
घ्रगामीरणप्रियः ॥ अश्वयोनौतुसंजातोबलवान्स्वा

मिवल्लभः ॥ १ ॥ भरणीरेवतीगजयोनिः ॥ ॥
फलम् ॥ ॥ मंदगामीबलाढ्यश्चबहुस्त्रीराज
वल्लभः ॥ सत्यवाग्ज्ञानवांश्चैवगजयोनौभवेन्नरः ॥
॥ २ ॥ कृ. ३ पु. ८ अजायोनिः ॥ ॥ फलम् ॥
॥ ॥ दुर्जनंदुर्घटस्थानंभेदवानविशंकितः ॥
अजायोनिप्रजातोसौबहुवृद्धिकरोभवेत् ॥ ॥
॥ ३ ॥ रो. ४ मृ. ५ सर्पयोनिः ॥ ॥ फलम् ॥
॥ ॥ दर्शनाद्भयदोनित्यंखटाटोपोनवर्तते ॥
परवेश्मापहारीचसर्पयोनौप्रजायते ॥ ४ ॥ आ.
६ मू. १९ श्वयोनिः ॥ ॥ फलम् ॥ ॥ स
र्वभक्षीवृथावादीधूर्तःस्वामिहितेरतः ॥ अरण्य
गोदुःखसहःश्वानयोनौभवेन्नरः ॥ ५ ॥ पु. ७
आ. ९ मार्जारयोनिः ॥ ॥ फलम् ॥ ॥ पिंगा
क्षःसर्वभक्षीचचंचलोद्वेषकारकः ॥ मार्जारयोनि
संजातोवृथाकोपोभयान्वितः ॥ ६ ॥ म. १० पू.
११ मूषकयोनिः ॥ ॥ फलम् ॥ ॥ धूर्तःस्व

कार्यनिरतःपरकार्यविनाशकः ॥ शत्रूणांमूलविच्छे
त्तानरोमूषकयोनिजः ॥ ७ ॥ उ. १२ उ. २६
पशुयोनिः ॥ ॥ फलम् ॥ ॥ गोधनैर्बहुभि
र्युक्तःक्षीराहारोऽतिसुंदरः ॥ परकार्यप्रकर्त्ताचपशु
योनौनरोभवेत् ॥ ८ ॥ ह. १३ स्वा. १५ माहिषी
योनिः ॥ ॥ फलम् ॥ ॥ मंदगामीस्थूल
तनुर्बह्वाशीबलवान्भवेत् ॥ बहुक्षीराज्यभोजीच
माहिषीयोनिसंभवः ॥ ९ ॥ चि. १४ वि. १६
व्याघ्रयोनिः ॥ फलम् ॥ ॥ कृतांतःसर्वभक्षी
चविद्यावान्कुशलोभवेत् ॥ व्याघ्रयोनौनरोजातो
दर्शनाद्भयदोमहान् ॥ १० ॥ अ. १७ ज्ये. १८
मृगयोनिः ॥ ॥ फलम् ॥ ॥ गीतवा
द्यप्रियोनित्यंसुंदरश्चारुदर्शनः ॥ मृगयाभिरतो
धूर्तोमृगयोनौनरोभवेत् ॥ ११ ॥ पू. २० श्र. २२
कपियोनिः ॥ ॥ फलम् ॥ ॥ पिंगाक्षश्चपलोरण्य
गामीचापल्यवान्भवेत् ॥ नविशेन्नरकंकाश्चित्क

पियोनिसमुद्भवः ॥ १२ ॥ पू. २० अभिजि
न्नकुलयोनिः ॥ ॥ फलम् ॥ ॥ चारुदर्शनका
र्यार्थीपरकार्यार्थसादरः ॥ गृहवासीचिरायुःस्या
न्नरोनकुलयोनिजः ॥ १३ ॥ ध. २३ पू. २९ सिं
हयोनिः ॥ ॥ फलम् ॥ ॥ महाबलीचपिंगाक्षः
कृशोमध्येभयानकः ॥ सिंहयोनौप्रजातस्तुसर्व
भक्षीसमुद्भवः ॥ १४ ॥ इतियवनजातकेयोनिफ
लम् ॥ ॥ अथगणफलम् ॥ ॥ गुरुदेवद्विजाती
नांभक्तःशास्त्रविमर्शकः ॥ देवतासदृशीमूर्तिर्जा
तोदेवगणोभवेत् ॥ १ ॥ तामसःपापकृद्द्वेषीध
र्मिष्ठःकलहाप्रियः ॥ निष्ठुरइछन्नपापश्चगणेस्या
द्राक्षसेनरः ॥ २ ॥ अन्नदाताधनाढ्यश्चप्रजावा
न्देवपूजकः ॥ मानुषर्क्षेनरोजातोवस्त्रस्त्रीसुख
भोगकः ॥ ३ ॥ ॥ इतिगणफलम् ॥ ॥अथय
वनजातकेयोगफलम् ॥ ॥ स्वदारपरितुष्टश्चगृह
कार्येषुनिश्चितः ॥ स्वतंत्रःसर्वकार्येषुविष्कंभे

जायतेऽशुचिः ॥ १ ॥ सुरूपश्चप्रियवचाधनधान्यस
मन्वितः ॥ प्रगल्भोमनसातुष्टःप्रीतियोगेचजायते
॥ २ ॥ प्रीतिमांश्चशुचिःसम्यग्जलक्रीडापरायणः॥
आयुरारोग्यवांश्चैवह्यायुष्मद्योगसंभवः ॥ ३ ॥
बहुवाक्योबहुनरोनिर्गुणःसर्वकर्मसु ॥ गंधप्रियश्चसु
भगोसौभाग्येजायतेनरः ॥ ४ ॥ लक्ष्मीवान्गुणवां
श्चैवशौचयुक्तःसदाशुचिः ॥ शोभनेचनरोजातोधू
र्तश्चकीर्तिवत्सलः ॥ ५ ॥ परापवादनिपुणःसत्यही
नःसदालसः ॥ परदाररतःकामीह्यतिगंडेभवेद्यदि
॥ ६ ॥ प्रजावान्गुणवांश्चैवब्रह्मकर्मरतःशुचिः ॥
न्यायकर्मरतोनित्यंसुकर्माणिभवेद्यदि ॥ ७ ॥ धार्मि
कःसत्यवादीचदृढचित्तःसुलोचनः ॥ क्रूरःपटुमति
श्चैवधृतियोगेप्रजायते ॥ ८ ॥ असत्यवादीपिशुन
श्चलचित्तोऽतिनिष्ठुरः॥ शूलयोगेनरोजातःशूलवाञ्जा
यतेध्रुवम् ॥ ९ ॥ वाचालःसत्यहीनश्चक्लेशभाक्कलह
प्रियः॥सुस्थिरःसुभगोगंडेनरोजातःसमाहितः १०॥

महामतिःस्थिरश्चंडःसत्यवादीजितेंद्रियः ॥ वृद्धि
योगेनरोजातोधनवाञ्ज्ञानवान्भवेत् ॥ ११ ॥ ध्रुव
कार्येसदाकर्ताशत्रुपीडाविवर्जितः ॥ ध्रुवयोगेनरो
जातोध्रुवकार्यैमहामतिः ॥ १२ ॥ धूर्तोमलिनचित्त
श्चपरकार्यविनाशकः ॥ निष्ठुरोमद्यभोगीचव्याघाते
जायतेयदि ॥ १३ ॥ भोक्तागोधनवांश्चैवसर्वजश्च
गुणान्वितः ॥ तेजस्वीपितृसदृशोहर्षयोगेप्रजायते
॥ १४॥ सुस्थिरःसत्यसंपन्नोबुद्धिमांश्चगुणान्वितः॥
तेजस्वीपितृसदृशोवज्रयोगेप्रजायते ॥ १५ ॥
कुलीनःसत्यसंपन्नोदृढवाक्योमहामतिः ॥ संसिद्धः
सर्वकर्ताचसिद्धियोगेप्रजायते ॥ १६ ॥ स्थिरःका
र्यकरोनित्यंपरकार्यविनाशकः ॥असत्यवादीमूर्खश्च
जनितोव्यतिपातके ॥ १७ ॥ कुलश्रेष्ठःसत्यवादी
भोगीमित्रजनप्रियः ॥ धनधान्यसमृद्धश्चवरीयान्यो
गसम्भवः ॥ १८ ॥ पापवृत्तिर्दुराचारःप्रबुद्धःसाह
सीखलः ॥ मलिनोमंदेदेहश्चपरिघेजननंयदि॥१९॥
प्रसन्नवदनोधीरःसर्वव्यापारकोविदः ॥ धनाढ्योनी

तिमांश्चैवशिवयोगेप्रजायते ॥ २० ॥ सिद्धःसर्वेषु कार्येषुपरकार्यप्रकारकः ॥ गुरुदेवद्विजातीनांसिद्धियोगेप्रजायते ॥ २१ ॥ विविधव्ययवाञ्छीलःस्वामिभक्तोमहामतिः ॥ गंधप्रियःसदोदारःसाध्ययोगेप्रजायते ॥ २२ ॥ सुभगोधार्मिकोलोकेशूरःसत्यसमन्वितः ॥ प्रणतःप्रियकारीचशुभयोगेप्रजायते ॥ २३ ॥ सत्यवान्सुमतिःकांतोधनिनांसुमतोनरः॥ सर्वकार्येषुकुशलःशुक्लयोगेप्रजायते ॥ २४ ॥ प्रियवाग्दानदःसत्योब्रह्मज्ञोब्राह्मणप्रियः ॥ प्रगल्भोनिर्मलोधीरोब्रह्मयोगेप्रजायते ॥ २५ ॥ धनवांश्चमहाभोगीराजकर्मगुणान्वितः ॥ योगीसर्वगुरुःकामीचैंद्रयोगेप्रजायते ॥ २६ ॥ मलिनःपिशुनश्चैवबहुभाषणतत्परः ॥ परदाररतोनित्यंजायतयोगवैधृतौ॥२७॥ इतियवनजातकेसिद्धांतेयोगफलानि ॥ ॥ अथकरणफलम्॥ ॥ मंदःशीघ्रउदारश्चसुखवान्धनवर्जितः बवाख्यकरणेजातोभवत्सेनापतिर्नरः ॥ १ ॥ सुधीरःसुभगस्त्यागीबाललीलारतःसुखी ॥ बालवे

यदिजातस्तुबालकर्मरतःसदा ॥ २ ॥ प्रच्छन्नकीट
लेयस्तुकौतुकानंदवर्धनः ॥ पापकर्मरतःसौख्या
त्कौलवेजननंयदि ॥ ३ ॥ सात्त्विकःसत्यसंपन्नःस्थि
रश्चंडःप्रतापवान् ॥ तामसोमलिनःपुष्टोजातस्तैति
लकेसदा ॥ ४ ॥ मंत्रवान्मतिमान्दक्षोदुर्बलोबहुभाष
णः॥चपलःकलहरतोगराख्येजायतेनरः ॥ ५ ॥ नाना
पण्यविचारज्ञोवणिक्कर्माभिजीवकः ॥ वणिजाख्ये
नरोजातोवणिक्कर्मरतोभवेत् ॥ ६ ॥ क्रूरःसाहसि
कश्चंडःपापकर्मरतःखलः ॥ प्रभूतःसर्वकार्येषुवि
ष्टयाख्येचप्रजायते ॥ ७ ॥ सदोद्योगकरःशां
तःसदाज्ञानीमहामतिः ॥ शकुनाख्येनरोजातः
शकुनज्ञोविशेषतः ॥ ८ ॥ कृषिवाणिज्यकारश्च
सदोद्योगीगतक्लमः ॥ निरालसःसत्ययुक्तोजात
श्चैवचतुष्पदे ॥ ९ ॥ नानाधातुविशेषज्ञःस्वक
र्मगुणवान्भवेत् ॥ नागाख्यकरणेजातोनागानां
पाटनेरतः ॥ १० ॥ किंस्तुघ्नकरणेजातःपाप
कर्मामहामतिः ॥ क्रूरःषंढोदरिद्रीस्यान्नामभावे

नतत्फलम् ११ ॥ इतिश्रीयवनजातकेसिद्धांतरेकरणफलम् ॥ अथराशिफलम् ॥ तत्रादौ मेषराशिगुणः ॥ ॥ पुत्रवान्भाग्यवानुग्रःपरोपकरणेरतः ॥ राजपूज्योधर्मरतःसुभोगीशीलवान्भवेत् ॥ १ ॥ द्विभार्यश्चपलस्तेयीभीरुर्वर्षज्वरीभवेत् ॥ प्रथमे १ सप्तमे ७ वर्षवत्सरेचत्रयोदशे १३ ॥ २ ॥ तृतीये३वत्सरेतोयपूर्णभांडेनिमज्जति ॥ द्वादशा १२ ब्देतथानद्यांषोडशाब्दे १६ ल्पमृत्युकृत् ॥ ३ ॥ पंचविंशति २५ वर्षेचस्वल्पायुःकतिबांधवः ॥ विषूचिकाभयंसप्तदशे १७ द्वात्रिंश ३२ वत्सरे ॥ ४ ॥ शस्त्रघातेनतीव्रेणस्वल्पमृत्युर्भविष्यति ॥ शुभग्रहावलोकेनजीवेन्नवति ९० वत्सरम् ॥ ५ ॥ कार्तिकेबहुलेपक्षेनवम्यांबहुरात्रके ॥ बुधेह्निशीर्षमूलेलंनिधनंचभाविष्यति ॥ ॥ ६ ॥ इतिमेषराशिगुणः ॥ अथवृषभराशिगुणः ॥ ॥ कृपणश्चार्थवांश्चैवद्यापज्जीवीस्त्रियाजितः ॥ अदातापरकामीचस्थिरःसत्यरतःप्रियः ॥

॥ १ ॥ हिबुकस्तनमध्येचकिंचिद्विघ्नंप्रदृश्यते॥ वर्षे १ ज्वरी वर्षे ३ सव्यचरणेअग्निभयम् ॥ वर्षे ९ज्वरी वर्षे २८उदकभयम् ।वर्षे१९अल्पमृत्युः॥ वर्षे १९ ॥ द्विभार्यः । वर्षे ९६ आयुः ॥ माघमासेशुक्लपक्षेनवम्यांभृगुवासरे ॥ नक्षत्रेरोहिणीसंज्ञेनिधनंतस्यनिर्दिशेत् ॥ इतिवृषभराशिगुणः ॥ अथमिथुनराशिगुणः ॥ कुटुंबवत्सलश्चैवस्त्रीणां कौतूहलप्रियः ॥ वयस्याद्येसुखीमध्येवयस्यंतेच मध्यमः ॥ १ ॥ द्विभार्योगुरुदेवानांपूजकोगुणवान्सुखी ॥ वर्षे ८ वृषभयम् । वर्षे१६उदकभयम् ॥ वर्षे १८ वर्णरोगः ॥ वर्षे २१ अल्पमृत्युः ॥ वर्षे ७७ आयुः ॥ वैशाखेशुक्लपक्षेचद्वादश्यांबुधवासरे मध्याह्नेहस्तनक्षत्रेमृत्युस्तस्यविनिर्दिशेत् ॥ इति मिथुन० ॥ ॥ अथकर्कराशिगुणः ॥ ॥ संग्रहीसर्ववस्तूनांपुत्रवाञ्छीलवान्गुणी ॥ ॥ कार्यकर्तापितुर्मातुर्भक्तःस्त्रीजितमृत्युमान् ॥ १ ॥ वर्षे७ ज्वरी ॥ वर्षे ३ वामभागेग्निभयम् ॥ शिश्नेति

लकः ॥ वर्षै १९ सर्पभीः। पंचबांधवाः ॥ वर्षै ३२ अल्पमृत्युः ॥ वर्षै ९६आयुः ॥ माघेसितेनवम्यां तुरोहिण्यांनिधनंभृगौ ॥ इतिकर्कराशिगुणः ॥ ॥ अथसिंहराशिगुणः ॥ ॥ धनधान्ययुतःश्रीमान्विक्रमीतेजसायुतः ॥ माघमासप्रियोमिष्टान्नभोजीचकलानिधिः ॥१॥ वर्षै १बाधा॥वर्षै १दक्षिणहस्तपादेअग्निभयम्॥वर्षै १ईतिविषूचिकाभयं॥वर्षै९ गोभयम्॥वर्षै७ज्वरः॥ वर्षै ३२अल्पमृत्युः ॥ इति सिंहराशिगुणः ॥ ॥ अथकन्याराशिगुणः ॥ ॥ अर्थवान्स्वजनानांचप्रियःस्याद्बहुविक्रमः ॥ वर्षै ९ वामनेत्रेरोगः ॥ वर्षै ३ अग्निभयम् ॥ वर्षै ९ ज्वरः ॥ २१ प्रपतनम् ॥ बहुस्त्रियः ॥ स्त्रीबंधः वर्षै २१ शिश्नलांछनः ॥ वर्षै १३ महापीडा॥विषूचीसंभवा।कंठलांछनंच वर्षै १९ सर्पभयम्। वर्षै३० अरण्येशस्त्रघातः ॥ नित्यंप्रवासी ॥ वर्षै ८० आयुः कृष्णत्रयोदशीचैत्रेरविवारेमृतिर्भवेत् ॥ इति कन्याराशिगुणः ॥ अथतुलाराशिगुणः ॥ ॥

विद्वद्वादीलोकपूज्योवस्तुग्राहीसवित्तवान् ॥ वापीकूपतडागादिदेवतागारकारकः ॥ द्विभार्यः ॥ वर्षे ७ अग्निभयम् ॥ वर्षे ८ ज्वरः ॥ वर्षे १२ उदकभयम् ॥ वर्षे २१ अल्पमृत्युः ॥ वर्षे २० वृक्षपातःतुरंगपातोवा स्वल्पबंधुः । वर्षे ८८आयुः। वैशाखस्यासितेपक्षेसर्पक्षेंभूसुतेमृतिः ॥ इतितुलराशिगुणः ॥ अथवृश्चिकराशिः ॥ ॥ असंतुष्टःसदाक्रोधीद्वेषीचकलहप्रियः ॥ परतापकरोमित्रद्वेषीविश्वासघातकः ॥ वर्षे १८ ज्वरः वर्षे ३ अग्निभयम् ॥ वर्षे २८ अल्पमृत्युः ॥ चतुर्बंधुयुतः ॥ वर्षे ६० काशींगमिष्यति ॥ द्विभार्यः ॥ बहून्यपत्यानि ॥ वर्षे ९० आयुः ॥ ज्येष्ठशुक्लदशम्यांचबुधेहस्तेमृतिर्भवेत् ॥ ॥इति वृश्चिकराशिः ॥ ॥ अथधनराशिगुणः ॥ लोकप्रियोराजमान्यःसर्ववस्तुसुसंग्रही ॥ क्षत्रजित्पंडितोमानीद्विभार्यःपुत्रवत्सलः ॥ १ ॥ वर्षे १ महारोगी ॥ वर्षे १३ अपमृत्युःपरस्त्रीलंप

टः ॥ प्रथमेवयसिश्रीमान्बंधुभिःसहितोनरः ॥ ॥ ४ ॥ वर्ष ७९ आयुः शता १०० युर्वा ॥ शतायुःशुभदृष्टचास्यादाषाढेकृष्णपक्षके ॥ पंचम्यां श्रवणयुतेवत्सरेमरणंशनौ ॥ इतिधनराशिः ॥ अथमकरराशिगुणः ॥ ॥ विचक्षणःकर्मकर्ता बहुपुत्रसमन्वितः ॥ अनृतीसप्तमेवर्षैवारिभीः स्यान्नसंशयः ॥ १ ॥ वर्षे १० वृषपातः ॥ वर्षे २१ ज्वरः ॥ वर्षे ३३ अपमृत्युः ॥ वर्षे ९ पीडा॥ वर्षे २९, ३० वामांगेअग्निभयम् ॥ शुभदृष्टचाशतायुश्चदशम्यां श्रवणेसिते ॥ भौमेह्निमरणंज्येष्ठेऋक्षेस्यान्नात्रसंशयः ॥ इतिमकरः ॥ अथकुंभराशिगुणः ॥ ॥ उद्योगीरूक्षदेहःपृथुकरचरणोमद्यपानेप्रसक्तः सद्देहोधर्महीनः परसुतजनकः स्थूलदेहःकुनेत्रः ॥ शाठ्यालस्याभिभूतोविपुलमुखकटिः शिल्पविद्यासुपूज्यो दुःशीलोदुःखयुक्तोघटमृदुपगतेरात्रिनाथेदरिद्रः ॥ १ ॥ इतिकुंभराशिगुणः ॥ अथमीनराशिगुणः ॥ ॥ शि

ष्टोक्त्यासद्विवादः प्रियजनरहितः शास्त्रविद्वृत्तदेहो
ज्ञेयज्ञोधर्मनिष्ठोबहुयुवतियुतःसौख्यभाग्भूपसेवी
॥ ईषत्कोपोनमर्षःसुखनिधिधनभाक्स्त्रीजितःशुद्ध
भावोयानासक्तःसमुद्रेतिमियुगलगतेशीतगोदान
शीलः ॥ इतियवनजातकेमीनराशिगुणः ॥ अथ
ग्रहभावफलानि ॥ ॥ दुःखंसुखंतथोद्वेगःकांतिःसौ
ख्यंधनंतथा ॥ दुःखंहानिस्तथादुःखंलग्नेरव्यादिकं
फलम् ॥ १ ॥ दुःखंधनंतथाहानिःसौख्यंलाभंधनं
तथा॥हानिर्नाशस्तथादुःखंधनेरव्यादिकंफलम् ॥२
सौख्यंकार्यमहान्कोपःसिद्धिःसौख्यंप्रियासुखम् ॥
हानिर्दुःखंतथादुःखंतृतीयफलमीरितम् ॥ ३ ॥दुः
खंसुखंतथाहानिःसुखंसौख्यंतथाधनम् ॥ दुःखंदुः
खंतथादुःखंसुहृत्स्थानेफलंस्मृतम् ॥ ४ ॥ दुःखं
सुखंतथादुःखंपुत्रंद्रव्यं तथाधनम्॥ दुःखंदुःखंतथा
दुःखंपुत्रस्थानेफलंस्मृतम्॥५॥ सुखंदुःखंसुखंदुः
खंसुखंदुःखंसुखंव्यथा ॥ सुखंचैवरिपुस्थानेग्रहा
णांफलमीरितम्॥६॥हानिः सुखंतथादुःखंसुखंमानः
सुखंतथा ॥ दुःखंहानिस्तथादुःखंजायास्थानेफलं

लभेत् ॥ ७ ॥ सूर्यादिनवखेटाःस्युर्मृत्युस्थाने
यदातदा ॥ विरुद्धंफलमेवस्यान्नात्रकार्याविचारणा
॥ ८ ॥ अत्रअष्टमस्थानेशुभग्रहाश्चेत्तदाकिंचिदि
ष्टफलम् ॥ दुःखंसुखंतथादुःखंसुखंसौख्यंसुखंतथा
॥ दुःखंहानिस्तथादुःखंधर्मस्थानेफलंस्मृतम् ॥
॥ ९॥ दुःखंसुखंतथादुःखंसुखंमानस्तथासुखम् ॥
दुःखंदुःखंमानहानिः कर्मस्थानेफलंस्मृतम् ॥
॥ ११ ॥ राजमानोबहुधनंराजसौख्यंशुभं
शुभम् ॥ धनंकीर्तिःसुकीर्तिश्चयशआयेफलंस्मृ
तम् ॥ ११ ॥ विशालनेत्रःकाणश्चपापंदारिद्र्यमे
वच ॥ कृशोत्ययस्तीव्रताचतीव्रस्तीव्रोव्य
येस्मृतम् ॥ १२ ॥ इतिग्रहभावफलानि ॥ खच
रस्यभुक्तभोग्यभागाखरस ६० घ्नागतिभाजिताः
क्रमेण ॥ यातैष्यदिनैःप्रयांतिराशिंखचरेवाक्रि
णितत्क्रमाद्विलोमम् ॥ १ ॥ अर्थ–खचरजोग्रह
उसकाभुक्तअथवाभोग्यसेभागलेकरखरसजो ६०
उससेगुणनाऔरग्रहऔरग्रहकेगतीसेभागदेनाजो
लब्धदिवसघटीआवेउसादिनघटीसेजोदिवसकीग

णनाहोयउससेग्रहपीछेअथवाआगेकीराशीमेंजाय
गा पीछेग्रहचलेतोआगेकी क्रियाभीउसीतरहसे
करना ॥ श्लोकः—देवब्राह्मणवंदनाद्गुरु
वचःसंपादनात्प्रत्यहंसाधूनामभिभाषणाच्छ्रुतिरव
श्रेयःकथाकर्णनात् ॥ होमादध्वरदर्शनाच्छुचिमनो
भावाज्जपाद्दानतोनोकुर्वंतिकदाचिदेवपुरुषस्यैवंग्र
हाःपीडनम् ॥ १ ॥ पापिष्ठायेदुराचारादेवब्राह्मण
निंदकाः ॥ अपथ्यभोजिनस्तेषामकालमरणंध्रुवम्
॥ २ ॥ येपथ्यभोजनरताइत्यादि० ॥ अथपात्रिका
क्रमः ॥ आशिर्वादश्लोकाः ॥ जन्मकालः ॥ प्राकृतज
न्म ॥ यात्रादौवर्ज्यम् ॥ जातस्यजंतोःषट्धिष्ण्यानि
॥ तात्कालिकाग्रहाः ॥ ग्रहजफलज्ञानार्थंजन्मकुं
डली ॥ अथभावफलानि ॥ पञ्चाङ्गफलानि ॥
अष्टोत्तरीदशानुक्रमः ॥ ॥ छ ॥

इतियवनजातकंसमाप्तम् ।

पुस्तकमिलनेकाठिकाना—

**खेमराज श्रीकृष्णदास,**

"श्रीवेङ्कटेश्वर" छापाखाना—( मुम्बई. )

